सर्वं एव जानन्ति यत् कोकिलः काकश्च द्वावपि कालिम्ना तुल्यौ, एकस्यामेव शाखायां तिष्ठतः यावद् वाचं नोच्चारयतः तावत्तयोः भेदो न ज्ञायते। परं वागुच्चारणसमकालमेव कोकिलस्तु सादरं सस्नेहञ्च ईक्ष्यते प्रशस्यते च, परं वराकः काकस्तु 'कां कां' शब्दं कर्तुमारब्ध एव प्रस्तरशकलैः ताड्यत एव। प्रियभाषणे हि न कश्चिद् व्ययो भवति, नान्यत् कष्टं चापतति, प्रत्युत प्रियवचसः प्रयोगेण वशीभूता लोकास्तस्मै सहायतां ददति। प्रियवचनेऽपूर्वा आकर्षिणी शक्तिरस्ति। इत्थं प्रियभाषिणां नास्ति कोऽपि परः। अतोऽस्माभिः प्रियवादिभिर्भाव्यम्।

## १७–संघे शक्तिः कलौ युगे ( एकता )

एकत्वभावनया यत् कार्यं क्रियते तद् 'एकता' इति कथ्यते। एकतया मानवो बलवान् भवति। एकतया समाजः, राष्ट्रं, संसारश्च उन्नतिपथमधिरोहति।

अद्यत्वे संसारे एकताया अतीवावश्यकता वर्तते। यस्मिन् देशे अद्य एकताया अभावोऽस्ति स निजस्वातन्त्र्यं रक्षितुं नैव शक्नोति। अस्माकं देशोऽपि एकताया अभावात् चिरं पारतन्त्र्यपाशबद्ध आसीत्। परं यदा भारते एकत्वभावनाया जागर्तिरभवत् तदा तत् स्वातन्त्र्यमलभत। एकताया अद्भुत एव प्रभावः। तन्तुसमूहेन सुदृढः पटो जायते। जलबिन्दुसमूहेन महानदी सागरश्च भवति। क्षुद्राणि तृणानि यदा रज्जुरूपं धारयन्ति तदा महाबलवान् गजोऽपि तेन बध्यते। अत एवोच्यते—

"अल्पानामपि वस्तूनां संहतिः कार्यसाधिका।
तृणैर्गुणत्वमापन्नैर्बध्यन्ते मत्तदन्तिनः॥"

संसारे आदिकालाद् एव एकताया माहात्म्यं वर्तते। श्रुतौ स्मृतौ च अनेकस्थलेषु एकताया महिमा वर्णितोऽस्ति। ऋग्वेदस्यान्तिमे सूक्ते एकताया महत्त्वं प्रतिपादितमस्ति। सर्वे मानवा एकत्वभावनया प्रेरिता भवेयुः। तेषां विचाराः, मनांसि, गमनं, भाषणं सङ्कल्पाश्चैकत्वभावनयैव युक्ताः स्युः। इत्थं जगति सुखस्य शान्तेश्च प्राप्तिः संभवति। तथा हि—

संगच्छध्वं संवदध्वं सं वो मनांसि जायताम्।
समानो मन्त्रः समितिः समानी समानं मनः सह चित्तमेषाम्॥
समानं मन्त्रमभिमन्त्रये वा समानेन हविषा जुहोमि।
समानमस्तु वो मनो यथा वः सुसहासति॥

अत एतत्सत्यं वर्तते यत् यत्रैकता विद्यते तत्र सुखशान्तिसमृद्धयो जायन्ते, यत्रैकताया अभावो वर्तते तत्र हानिः विनाशश्च दृश्यते ।

## १८—व्यायामः

व्यायामपुष्टगात्रस्य बुद्धिस्तेजो यशो बलम् ।
प्रवर्धन्ते मनुष्यस्य तस्माद् व्यायाममाचरेत् ॥

सर्वसम्मतोऽयं सिद्धान्तः यदस्माकं शरीरस्य प्रतिक्षणं क्षयो भवति, अतस्तस्य पूर्तिरपि परमापेक्षिता वर्तते । नियमत एव क्रियमाणो व्यायामः फलप्रदो भवति । यथा वयं शयनासनविहारादिषु नियमान् पालयामस्तथैव व्यायामेऽपि नियमस्य पालनं परमावश्यकं भवति ।

द्विप्रकारो व्यायामो भवति—शारीरो मानसश्च । भ्रमण-धावन-क्रीडनादिकं शारीरो व्यायामः । मनन-कल्पन-निदिध्यासनादिकं च मानसो व्यायामः कथ्यते । परमद्यत्वे व्यायामशब्देन प्रायेण शारीरिकश्रम एव ज्ञायते । स्वस्थे शरीरे मस्तिष्कस्यापि व्यापारः सम्यक् परिचलति । परं कालनियमेन रहितः कादाचित्को व्यायाम इष्टफलं न ददाति । व्यायामकरणेन शरीरस्य सर्वेषु भागेषु सम्यक्तया रक्तसंचारो जायते । मनसि स्फूर्तिरुदेति, रोगाः समीपं नायान्ति जीवनमाह्लादमयं च जायते । व्यायामेन देहस्य सर्वावयवेषु कर्मण्यता, ऊर्जस्विता, सहिष्णुता चायाति । नियमयुक्तेन व्यायामेन उदरे परिपाकशक्तिर्वर्धते पाचनशक्तिप्रभावेण मनोऽपि प्रसन्नं जायते । मनःप्रसादेन च समस्तान्यपि कार्याणि सिध्यन्ति । स्वस्थः स मानवो यो रोगशून्यगात्रः सदा प्रसन्नमुख उत्साहसम्पन्नश्च भवति ।

इह संसारे यावन्तः सुप्रसिद्धा महापुरुषा जाताः, ते सर्वे व्यायामप्रिया आसन् । हिन्दुकुलदिवाकरः कीर्तनीयचरितः श्रीराणाप्रतापसिंहः व्यायामस्य परमोपासक आसीत् । तन्महिम्नैव तस्य वक्षःस्थलं विशालं, बाहू पीनौ, कन्धरा च सुदृढा समजायत । तस्य नेत्रयोर्दुर्दर्शं तेजो व्यायामेन समुत्पादितम् । महाराष्ट्रकेसरी श्रीशिववीरोऽपि व्यायामस्य बलेनैव स्वशरीरं स्फूर्तेः अदम्योत्साहस्य च केन्द्रमकरोत् । तस्य सर्वे सैनिका अश्वारोहणनिपुणा आसन् । व्यायामस्य अनेके प्रभेदाः सन्ति; केनापि सर्वाङ्गीणः श्रमो जायते, केनचिच्चावयवविशेष एव पुष्टो भवति, यथा वारितरणेन हाकीक्रिकेटादिक्रीडनेन च । एषु मानवः

स्वरुचिं चावश्यकतां च विचार्य एकतममाश्रयेत्। येऽधिकं व्यायामं कर्तुं न पारयन्ति ते केवलं भ्रमणमेव कुर्वन्तु। भ्रमणं हि सर्वोत्कृष्टो व्यायामोऽस्ति। अनेन मनोविकासः, शक्तिवृद्धिः, पाचनसामर्थ्यं च जायते। नगराद् बहिः शुद्धवायुसमन्विते क्षेत्रे धावनमपि छात्राणां कृते लाभप्रदं वर्तते।

## १९–अस्माकं विद्यालयः

अस्माकं विद्यालयः समया नगरमेकस्मिन् सुरम्ये स्थले स्थितोऽस्ति। विद्यालयस्याकर्षकाणि अभ्रंकषाणि भवनानि दर्शकानां चेतांसि बलाद् हरन्ति। अस्माकं विद्यालयः सुन्दरोद्यानमध्यगतोऽस्ति, यस्य विशालप्रधानद्वारस्योपरि दोधूयमाना पताका दूरादेव दृश्यते।

अस्माकं विद्यालयेऽध्यापकानां संख्या षष्टिः, तथा छात्राणां संख्या पञ्चाशदधिकं सहस्रं वर्तते। विद्यालयस्याध्यापकाः विविधविद्याप्रवीणाः शिक्षणकलानिपुणाश्च सन्ति। सर्व एव स्वस्वविषये पारङ्गताः सन्ति। तेषां मनोरमया शिक्षापद्धत्या आकृष्टाश्छात्रा घंटानादसमाप्तावपि बहिर्गन्तुं नोत्सुकाः। अस्माकं विद्यालये छात्रा अपि व्युत्पन्नधियः सन्ति। शिक्षाविषयेऽस्माकं विद्यालयः समस्तप्रदेशे ख्यातिं गतः; अतो दूरतोऽपि छात्रा अत्राध्ययनार्थमागच्छन्ति। अत्र पुस्तकानामेव पठनं पाठनञ्च न भवति, अपि तु सदाचारस्य पाठोऽपि पाठ्यते; विनयस्यानुशासनस्यापि शिक्षणं भवति; देशभक्तेः समाजसेवायाश्चापि शिक्षां छात्रा गृह्णन्ति, कर्त्तव्याकर्त्तव्ययोः सम्यग् ज्ञानमपि छात्राणामत्र भवति। प्रतियोगिता-परीक्षासु अस्मद्विद्यालयीयाश्छात्राः प्रदेशे सदैव विशिष्टं स्थानं प्राप्नुवन्ति। ते खलु न केवलं पठन एव निपुणतमाः सन्ति; अपि तु क्रीडने, धावने, तरणे, भाषणप्रतियोगितासु चापि। देशसेवायां समाजसेवायामपि च ते विशिष्टं स्थानं लभन्ते।

अस्मद्विद्यालये छात्राणां क्रीडनाय सुविस्तृतं क्रीडाक्षेत्रं विद्यते। अत्र सैनिकशिक्षाया अपि प्रबन्धो वर्तते। क्रीडनादिप्रतियोगितासु योग्यतमाश्छात्राः पारितोषिकमपि प्राप्नुवन्ति। विविधभाषासु वाक्पाटवार्थं विविधाः परिषदो प्रवर्तन्ते। विद्यार्थिनां स्वास्थ्यवृद्ध्यै व्यायामस्यापि प्रबन्धोऽस्ति। अत्र प्रायेण सर्वे छात्रा हृष्टपुष्टशरीरा विकसितवदना भद्रवेषाश्च सन्ति।

अस्माकं विद्यालयः सर्वत्रैव स्वगुणानुरूपां ख्यातिं प्राप्तः। अस्माकमपि कर्त्तव्यमेतदस्ति यद् वयं अस्य कीर्तिं चतुर्दिक्षु विस्तारयितुं प्रयतेम।

## २०—ग्रामोत्सवः

अपदेशेन केनचिदपि प्रमुदितचेतसां ग्रामीणानामेकत्र सम्पातः ग्रामोत्सवो जायते। कदाचित् कस्याश्चिद् ग्रामाधिदेवताया गुणानुवर्णनाय, कदाचित् कस्यचिद् वीरप्रवरस्य यशःकीर्तनाय, कदाचित् कस्यचित्साधोः दर्शनायोपदेश-लाभाय च, कदाचित् कस्यचिदपि महापुरुषस्य चरित्रश्रवणाय वा ग्रामीणा एकत्र सम्मिलन्ति। यथा यथा चायमुत्सवः समीपमागच्छति तथा तथा लोका-नामौत्सुक्यं वर्धतेतराम्। उत्सवदिने जना उज्ज्वलवस्त्राणि परिधार्य विविध-वस्तूनि क्रेतुं पर्याप्तं धनराशिमादाय स्त्रीभिः सह मोदमानाः प्रहृष्टाः गृहेभ्यः निष्क्रामन्त उच्चावचैराक्रन्दैः हृदयोल्लासं प्रकटयन्ति।

उत्सवेऽस्मिन् आपूपिका मौदकिकाश्च अपूपान् मोदकान् अन्यानि च मिष्टान्नानि सम्पाद्य तेषां प्रदर्शनेन आगन्तुकान् प्रलोभयन्ति। येऽपि आप-णिकाः लवणमयानि चणकचूर्णादीनि खाद्यान्नानि विक्रीणते तेषां पार्श्वेऽपि बहवो ग्रामीणाः क्रेतुं समायान्ति। इत्थं ग्रामोत्सवे चिन्तारहितानां ग्रामीणानां केवलं खादमोदोल्लासः हर्षोन्मादिता चैव प्रवर्तते।

अत्रोत्सवे अनेकत्र बालमनोविनोदार्थं मण्डलपरिवर्तीनि प्रेङ्खणानि विद्यन्ते, येषु बालाः पौनःपुन्येनारुह्यापि न तृप्तिं गच्छन्ति। क्वचिदैन्द्रजालिकाः प्रेक्षकाणां कुतूहलमुत्पादयन्ति, क्वचिदाहितुण्डिक आश्चर्यकरीः खेलाः प्रदर्श्य बहु धनमर्जति, क्वचित् द्यूतकारकाः ग्रामीणान् प्रतारयितुं द्यूतमाच-रन्ति। अत्र दीव्यन्तो मूर्खा ग्रामीणाः चिरसंचितं प्रयत्नैरर्जितं स्वधनं क्षणे-नैव हापयन्ति। सुरापायिनश्चापानमुपेत्य सुरां पीत्वा मत्ताः स्खलद्गतयो भूत्वा कथं कथमपि ग्रामाय प्रयान्ति।

इत्थमस्तं जिगमिषति भगवति सूर्ये मेलको भवति समाप्तः। प्रमुदितचेतसो जनाः त्वरया गृहान् प्रति यान्ति। गृहं गतास्ते मोदमानाः स्वानुभवानुकूलं परस्परं सम्भाषन्ते।

## २१—दीपमाला

दीपमालोत्सवोऽवश्यमेव पूर्वघटितघटनया सम्बद्धो वर्तते। श्रूयते यदस्मि-न्नेव दिने भगवान् श्रीरामचन्द्रो [illegible] रावणं हत्वा अयोध्यामाययौ।

तदा रामदर्शनलोलुपैरयोध्यावासिभिः प्रहृष्टैः गृहा रथ्या राजमार्गाश्च परिमार्जिताः। तैः स्थाने स्थाने दीपका प्रज्वालिताः, विप्रेभ्यो याचकेभ्यो बालेभ्यश्च मिष्टान्नं वितीर्णम् !

अयमुत्सवः प्रतिवर्षं कार्तिककृष्णामावस्यायां महता समारोहेणानुष्ठीयते सहर्षम्। सर्वतः प्रहृष्टैः जनैरविरलानि दीपकानि प्रज्वाल्यन्ते, अत एवास्योत्सवस्य दीपमालेति नाम ख्यातिं प्राप्तम्।

एवमप्यनुश्रूयते यदस्मिन्नेव दिने बलिना बन्दीकृता लक्ष्मीः भगवता वामनरूपमास्थाय मोचिता। अत एवास्मिन्दिने लक्ष्मीपूजनं क्रियते यत्ततो मुक्ता लक्ष्मीरस्माकं गृहमागच्छेत्। अस्मिन्नेव दिने जैनमतप्रवर्तकस्य अन्तिमतीर्थङ्करस्य भगवतो महावीरस्यापि निर्वाणं बभूव। अयमेव च आर्यसमाजप्रवर्तकस्य स्वामिनो दयानन्दस्य महाप्रयाणदिवसः।

अपरं च भारतं कृषिप्रधानो देशोऽस्ति। उपयुक्तवृष्टेरुत्पन्नोऽन्नराशिर्गृहे समायातः, तं च दृष्ट्वा हृष्टाः कृषि-गोरक्षा-वाणिज्यकर्माणो वैश्या उत्सवं कुर्वन्ति। किं च यथा च शरत्पूर्णिमा विशिष्टा भवति प्रकाशेन सर्वासु रात्रिषु, तथैव कार्तिककृष्णामावस्या तिमिरेण विशिष्टा भवति।

चिराय पूर्वमेव जना उत्सवेऽस्मिन् संलग्ना जायन्ते। धनत्रयोदशी, नरकचतुर्दशी अप्येतस्योत्सवस्य द्वे अङ्गे। प्रथमदिने त्रयोदश्यां जनाः पात्राणि क्रीणन्ति। द्वितीयदिने नरकचतुर्दशी जायते। अस्मिन्दिने भगवता श्रीकृष्णेन नरकासुरो हतः। लोका अपि मलरूपधरं नरकं गृहान्निःसारयन्ति। रात्रौ यमप्रीत्यर्थं च दीपदानं क्रियते।

अस्योत्सवस्य प्रधानो दिवसोऽमावस्या वर्तते। अस्मिन् दिने सर्वे जनाः प्रसन्ना दृश्यन्ते। सर्वे गृह-द्वार-रथ्या-शालामार्गान् संशोधितान् कुर्वन्ति। नरा नार्यश्च आत्मानं विभूषयन्ति, बालकानां मनांसि मोदकानि विविधानि च मिष्टान्नानि दृष्ट्वा प्रमुदितानि भवन्ति। पण्यवीथयः खलु नानापक्वान्नद्रव्यैः समलङ्कृता भवन्ति। रात्रौ तु स्वर्गायते मर्त्यलोकः। परस्परं मिष्टान्नस्य आदानप्रदानं भवति।

अस्य महोत्सवस्य 'द्यूतक्रीडा' कलङ्कोऽस्ति। अस्मिन्नुत्सवे महतीयं कुप्रथा। अतिनिन्द्यं कर्म तत्, न चापि अस्य विधानं वर्तते क्वापि। द्यूतक्रीडया

देशस्य महान् अपकारो भवति, बहवो जना द्यूते सर्वस्वं विनाशयन्ति। अस्य निराकरणं कृत्वा अस्मिन्दिने रामायण-महाभारतकथा-कीर्तनं कर्तव्यम्, येन देशस्य यथार्थो लाभो भवेत्।

## २२—महामना मदनमोहनमालवीयः

प्रचलिताङ्ग्लशिक्षाप्रणालीं भारतीयसंस्कृतेः गौरवस्य च अननुकूलामहितकरीं च विलोक्य तेषां पुनरुद्धरणाय, राष्ट्रियताप्रसाराय, उत्तमशिक्षाप्रचालनाय च श्रीमान् मदनमोहनमालवीयमहोदयः १९१६ खिस्ताब्दे भारतीयपुण्यभूमौ काश्यां हिन्दूविश्वविद्यालयं संस्थापितवान्, तत्पीठोपकुलपतिपदं चालञ्चकार। प्रायेणार्धशताब्दीपर्यन्तं राजनीतिकक्षेत्रे सामाजिकक्षेत्रे धार्मिकक्षेत्रे च महामनाः चिरस्मरणीयाः सेवा अकरोत्।

श्रीमान् मदनमोहनः दिसम्बरमासस्य २५ तारकायां १८६१ खिस्ताब्दे प्रयागसमीपवर्तिनि ग्रामे ब्राह्मणकुले जनिमुपलेभे। स प्रयागस्थ-म्योर-सेन्ट्रल-महाविद्यालये शिक्षामवाप। १८८४ खिस्ताब्दादारभ्य १८८७ पर्यन्तं गवर्नमेण्ट-हाई-स्कूलेऽध्ययनं कृत्वा कालाकांकरस्य राज्ञः व्यक्तिगतमन्त्रित्वकार्यं कुर्वन् 'दैनिकहिन्दूस्तान' इतिवृत्तपत्रस्य, 'इण्डियन ओपीनियन' इति साप्ताहिकस्य च संपादकत्वमकरोत्।

१८८५ खिस्ताब्दतः प्रचलन्त्या राष्ट्रियमहासभायाः स प्रथमसञ्चालकेषु प्रमुखतमो बभूव। १९३२-३३ खिस्ताब्दयो राष्ट्रियमहासभाधिवेशनयोः अध्यक्षपदे निर्वाचितोऽयमधिवेशनात्पूर्वमेव शासकवर्गेण निगृहीतोऽभूत्। १९२२-२३ खिस्ताब्दयोर्हिन्दूमहासभाया अध्यक्षो बभूव स महाभागः। १९२४ खिस्ताब्दे केन्द्रियविधानसभायाः सदस्यत्वं विरोधिदलस्य नेतृत्वं चोपलभ्य समुद्रतटकरविधानस्य विरोधप्रदर्शनार्थमत्यजत्। १९३०-३२ खिस्ताब्दाभ्यां पूर्वमनेन देशनायकत्वमङ्गीकृत्य कारावासयात्रापि कृता। परमस्मै राष्ट्रियमहासभायाः (कांग्रेसस्य) यवनतोषी नीतिर्न कदापि रोचते स्म।

महामनाः सदैव हिन्दूनामुत्थानाय तेषामुपरि चात्याचारगणां निराकरणार्थं सर्वस्वमपि समर्पयितुं सन्नद्ध आसीत्। अन्ततो यवनप्रायेषु स्थानेषु नवाखालीप्रभृतिषु मुस्लिमलीगस्य 'प्रत्यक्षक्रियायाः' परिणामे धर्मान्धयवनानां निरपराधहिन्दुषु हत्याकाण्डसतीत्वभ्रंशादिदुर्वृत्तानि आकर्ण्य अतीव दुःखितहृदयो महामना

वृद्धत्वेन जर्जरितगात्रः १९४६ खिस्ताव्दस्य नवम्बरमासस्य द्वादशतारिकायां देशवासिनः शोकाकुलीकुर्वन् पञ्चत्वं गतः ।

## २३—मातरः सर्वभूतानां गावः सर्वसुखप्रदाः ( गौः )

"गावो ममाग्रतः सन्तु गावो मे सन्तु पृष्ठतः ।
गावो मे सर्वतः सन्तु गवां मध्ये वसाम्यहम् ॥"

मानवजीवनस्य कोऽपि भागो नास्ति यत्र गोभिरुपकारो न क्रियते । यथा माता पुत्रं सर्वतो रक्षति, पालयति च तथैव गौरपि अस्मान् सर्वापद्भ्यः रक्षति पालयति च दुग्धादिना । अतीव सरला मुग्धा चास्या आकृतिः । तृणानि चरित्वा अमृतमयं दुग्धं ददाति मानवेभ्यः । अस्या वत्सा बलीवर्दा भूत्वा हलशकटादिषु युज्यन्ते । गावो हि श्वेताः, कृष्णाः, कपिलाः, पीताः, कर्बुराश्चेति नैकविधाः । कृषिप्रधानस्य भारतवर्षस्य तु गाव एव सर्वस्वम् । गोजाता वृषा हलैर्भूमिं कर्षन्ति, उर्वरां कुर्वन्ति, तैरेव क्षेत्राणि सिच्यन्ते कूपेभ्यो जलमुद्धृत्य । परिपक्वं च सस्यं तैरेव संशोध्यते गृहमानीयते च ।

ऐहलौकिक-पारलौकिकश्रेयःसाधनीभूतस्य धर्मस्य गावः सर्वप्रधानमङ्गम् । गवामेव दुग्ध-दधि-घृतादिभिः परिपुष्टानि भवन्ति मानवशरीराणि । आयुर्वेदशास्त्रेषु सर्वदुग्धेभ्यः गोदुग्धस्यैव उत्तमत्वमुद्घोष्यते, सर्वरोगेषु तस्यैवोपयोगः क्रियते । गव्यं घृतं बलं ददाति । गवां श्वासैरनन्ता रोगा विनश्यन्ति । गवां मूत्रं गोमयं चापि अनेकरोगाणां परमौषधम् । गोमूत्रेणोदररोगा विनश्यन्ति । गोमूत्रस्य निरन्तरपानेन स्नानेन च कुष्ठं सर्वथा विनश्यति । गोमयं हि पामादिचर्मरोगाणां सिद्धमौषधम् । गोमयस्य गन्धेन संक्रामकरोगाणामसंख्या कीटाणवो विनश्यन्ति । गोजातानां बलीवर्दानां कृपया उपलब्धानामिक्षुरस-सितशर्करागुडादीनां संमिश्रणेन प्रगुणीकृतैर्गव्यैरेव पायसघृतादिभिः निर्मितैरनेकविधैर्मिष्टान्नैः प्रतिदिनं रसास्वादानन्दमनुभवन्ति मानवाः । मरणकालेऽपि गोदानमेव पारलौकिकश्रेयःसाधकं मन्यते हिन्दुधर्मानुयायिभिः ।

यत्र हि भारते पुरा दधि-घृतानां नद्य इव प्रवहन्ति स्म तत्राद्य गवां रुधिरस्य नद्यः प्रवहन्ति, दुग्धदधिघृतादयो दुर्लभा जाताः । कथमद्य वयं बलिनो भवेम, शुष्कभोजनभक्षिणामस्माकं कथं दीर्घम् आयुः स्यात् । अद्य अस्माकं देशः स्वाधीनः । आशास्महे यद् भारतीयगोवंशस्य रक्षा भविष्यति राष्ट्रं च समृद्धं भविष्यति । पुनः शोभनानि दिनानि द्रक्ष्यामः ।

गवामेव सेवया लौकिकं च श्रेयः लब्धवन्तो मानवा इति कथयन्तीतिहासविदः। को न जानाति यद्रघुवंशावतंसो राजा दिलीपो गोसेवाफलभूतं पुत्ररत्नं लेभे। गौतमशिष्यस्य सत्यकामस्यापि गोसेवयैव तत्त्वज्ञानप्राप्तिर्बभूव।

भारतवर्षमिदं गां मातरं मन्यते। वस्तुतः सा मातैव। सा सर्वाण्यपि साम्येन पालयति। न केवलं गोरक्षकेभ्य एव ददाति सुखानि, अपि तु गोघातकेभ्यस्तथैव सुखानि वितरति। नात्र संशयस्य लेशः यद् भारतवर्षं गवामेव कृपया समृद्धिमाप्स्यति।

## २४—विज्ञानं वैज्ञानिका आविष्काराश्च

परमात्मना विचारशक्तिः केवलं मानवायैव प्रदत्ता। वस्तुतः साधारणज्ञानानन्तरं तस्य प्रवृत्तिः विशेषज्ञानाय संजाता। प्राकृततत्त्वानां वर्धमानज्ञानेन मानवमस्तिष्के सामाजिकभावोत्पत्त्या शनैः शनैः तस्यावश्यकता अपि वृद्धिं गताः यासां पूर्त्यै बहव आविष्कारा विज्ञानवेत्तृभिः कृताः। यत आवश्यकता हि आविष्काराणां जननी वर्तते।

विज्ञानप्रधानं युगमिदं नास्त्यत्र सन्देहः। वर्षशतद्वयात् विज्ञानस्य आविष्काराणां च वेगेन प्रगतिर्जाता। परं मानवस्य प्रबलया लिप्सया, लोलुपतया, स्वार्थपरायणतया च आधुनिकं विज्ञानम् आविष्कारजातं च रचनात्मकं सम्यग् विध्वंसात्मकमभवत्। परं मानवेन मानवतालाभार्थं प्राकृतिकशक्तीनां वशीकरणे यत्साफल्यं प्राप्तं तदपि न विस्मर्तुं शक्यते।

कतिपये आविष्काराः—

(१) पत्रप्रेषणप्रणाली—पुरा सूचनाप्रेषणे अब्देषु अपि समाचारज्ञानं दुष्करमासीत्, परमद्य द्विचक्रिकाणां, मोटराणां, वाष्पशकटीनां च साहाय्येन स्वल्प एव काले सहस्रक्रोशानामपि ज्ञानं जायते। अतः जगतः प्रतिकोणं वृत्तपत्रवितरणकेन्द्राणि संस्थापितानि वर्तन्ते।

(२) टेलिफोन-टेलिग्राफौ—एतत् द्वयमपि विद्युत्साहाय्येन कार्यं करोति। दूरदेशस्थिता अपि मानवाः परस्परं वार्तालापं कर्तुं शक्नुवन्ति। इत्थमद्य व्यापारप्रसारः, सुरक्षाप्रबन्धश्च सुकरः सञ्जातः।

(३) विद्युच्छक्तिः—अद्य प्रत्येकमपि कार्यं विद्युच्छक्त्या अल्पव्ययेन सम्पादयितुं पार्यते। शकटीगमनं, यन्त्रसञ्चालनं, प्रकाशः, गृहाणामुष्णीकरणं शैत्योत्पादनं, भोजनपाकः, गृहपरिमार्जनं च विद्युच्छक्त्या सम्पादयितुं शक्यते।

(४) यातायातप्रणाली—अद्य बाष्पेण विद्युता च चाल्यमानानां मोटर-वाष्पशकटीनां, समुद्रपोतानां, विमानानां चाविष्कारेण प्रसारेण च संसार-भ्रमणं सुकरं जातम्।

(५) चित्रकला—पुरा महता परिश्रमेण स्वहस्तेन चित्रं निर्मीयते स्म, परमधुना अपठितोऽपि सपदि चित्रं ग्रहीतुं शक्तो भवति।

(६) मुद्रणकला—अद्य मुद्रणयन्त्रप्रभावेण अतिदुर्लभमपि ग्रन्थरत्नम् अल्पमूल्येन लब्धुं शक्यते। वृत्तपत्राणि अधुना प्रतिगृहं पठ्यन्ते।

(७) अणुवीक्षणयन्त्रम्-दूरवीक्षणयन्त्रणां पारदर्शकयन्त्राणाम् (Radium) चाविष्कारेण कीटाणुज्ञाने, खगोलविद्यायां, शल्यचिकित्सायां च चमत्कारो जातः।

(८) चित्रपटः—अद्य चित्रपटस्य समाजे यादृशः प्रभावः न तादृशोऽन्यस्य कस्यापि वस्तुनः। बहवो जना अद्य भोजनं त्यक्तुं समार्थाः, परं न चित्रपटावलोकनमिति महदाश्चर्यम्।

(९) विमानानां, समुद्रपोतानां, जलान्तर्गामिनीनौकानां चाविष्कारेण अधुना विदेशयात्रा सुकरी जाता, परं युद्धं नितरां भीषणं जातम्।

(१०) टैङ्कप्रभृतीनामाविष्कारेण शान्तिमयं जीवनं दुष्करं जातम्।

(११) ध्वनिप्रसारकयन्त्राणां (Radio) टेलीविजनयन्त्राणां (Television) चाविष्कारेण मानवसमाजोऽपूर्वमुन्नतिपथमारूढः। अधुना मानवः सहस्रक्रोशेभ्योऽपि वृत्तं गीतादिकं च शृणोति। टेलीविजनसाहाय्येन च भाषणकर्तुर्गायकस्य वा आकृतिरपि दृष्टिपथमायातीति महदाश्चर्यम्।

(१२) अणुबम्बोऽणुशक्तिश्च—अणुबम्बो विनाड्यामेव लक्षशो मानवान् मृत्युपथं नेतुं समर्थः। उद्जनबम्बस्तु अशीतिक्रोशपर्यन्तं विध्वंसं कर्तुं शक्तः। अधुना संसारस्य प्रतिकोणं मानवो मृत्युमुख इवात्मानमनुभवति।

(१३) कृषियन्त्राणाम् (Tractors) आविष्कारेण विज्ञानप्रधानेऽस्मिन् युगे उत्पादनकर्मणि महती प्रगतिरवलोक्यते।

परमतीव खेदस्यायं विषयो यदियं विज्ञानस्य प्रगतिः मानवसमाजस्य कृते न सुखावहा। यतोऽद्य विज्ञानं रचनात्मकं नास्ति, अपि तु विध्वंसात्मकं वर्तते। अनादिकालतः उन्नतिपथं गच्छन्त्याः संस्कृतेः सभ्यतायाश्च कृते मानवद्वारैव नाशस्य बिभीषिका उत्पन्ना।

# संक्षिप्त धातु-पाठ

इस धातु-पाठ में मुख्य-मुख्य धातुओं के रूप दिये गये हैं। प्रत्येक धातु के बाद कोष्ठ में निर्दिष्ट है कि वह किस गण की है और किस पद (परस्मैपद, आत्मनेपद अथवा उभयपद) में उसके रूप चलेंगे। यह धातु-पाठ अकारादि क्रम से रखा गया है।

प्रत्येक धातु के रूप लट्, लोट्, लङ्, विधिलिङ् और लृट् में सुविधानुसार दिये गये हैं और अन्त में कोष्ठ के भीतर कर्मवाच्य या भाववाच्य के प्रथम पुरुष के एक वचन में रूप दिये गये हैं। संकेतों का प्रयोग संक्षेप में इस प्रकार किया गया है—

१—भ्वादिगण। २—अदादिगण। ३—जुहोत्यादिगण। ४—दिवादिगण। ५—स्वादिगण। ६—तुदादिगण। ७—रुधादिगण। ८—तनादिगण। ९—क्र्यादिगण। १०—चुरादिगण। क—कण्ड्वादिगण।

प०=परस्मैपदी। आ०=आत्मनेपदी। उ०=उभयपदी। यदि सोपसर्ग (यथा आ + गम्) धातु का प्रयोग लङ् में करना हो तो अ अथवा आ शुद्ध धातु के पहले लगाना चाहिए, उपसर्ग के पूर्व नहीं; जैसे नि + अवसत् =न्यवसत्।

प्रत्येक लकार के प्रथम पुरुष के एकवचन का रूप ही दिया गया है। जो धातु जिस गण की है, उस धातु के रूप उस गण की धातुओं के समान चलेंगे। जो उभयपदी धातुएँ परस्मैद में ही अधिक प्रचलित हैं उनके परस्मैपद के ही रूप दिये गये हैं, यथा—

अत् (निरंतर चलना, १ प०) अतति, अततु, आतत्, अत्यात्, अत्स्यति। (अत्यते)

अद् (खाना, २ प०) अत्ति, अत्तु, आदत्, अद्यात्, अत्स्यति। (अद्यते)

अय् (जाना, १ आ०) अयते, अयताम्, आयत, अयेत, अयिष्यते। (अय्यते)

अर्च् (पूजना, १ प०) अर्चति, अर्चतु, आर्चत्, अर्चेत्, अर्चिष्यति। (अर्च्यते)

अर्ज् (कमाना, १ प०) अर्जति, अर्जतु, आर्जत्, अर्जेत्, अर्जिष्यति। (अर्ज्यते)



अश् (खाना, ९ प०) अश्नाति, अश्नातु, आश्नात्, अश्नीयात्, अशिष्यति। (अश्यते)

अस् (फेंकना, ४ प) अस्यति, अस्यतु, आस्यत्, अस्येत्, असिष्यति। (अस्यते)
अस् (होना, २ प०) अस्ति, अस्तु, आसीत्, स्यात्, भविष्यति। (भूयते)
असूय् (दुःख देना, क०उ०) असूयति, असूयतु, आसूयत्, असूयेत्, असूयिष्यति। (असूय्यते)

आप् (पाना, ५प०) आप्नोति, आप्नोतु, आप्नोत्, आप्नुयात्, आप्स्यति। (आप्यते)
आप् (पहुँचाना, १०प०) आपयति, आपयतु, आपयत्, आपयेत्, आपयिष्यति। (आप्यते)

आस् (बैठना, २आ०) आस्ते, आस्ताम्, आस्त, आसीत, आसिष्यते। (आस्यते)
इ (पढ़ाना २आ०) अधीते, अधीताम्, अध्यैत, अधीयीत, अध्येष्यते। (अधीयते)
इ (जाना २ प०), एति, एतु, ऐत्, इयात्, एष्यति। (ईयते)
इष् (चाहना ६ प०) इच्छति, इच्छतु, ऐच्छत्, इच्छेत्, एषिष्यति। (इष्यते)
ईक्ष् (देखना १ आ०) ईक्षते, ईक्षताम्, ऐक्षत, ईक्षेत, ईक्षिष्यते। (ईक्ष्यते)
ईर् (प्रेरणा करना १०उ०) ईरयति, ईरयतु, ऐरयत्, ईरयेत्, ईरयिष्यति। (ईर्यते)
ईर्ष्य् (ईर्ष्या करना १ प०) ईर्ष्यति, ईर्ष्यतु, ऐर्ष्यत्, ईर्ष्येत्, ईर्ष्यिष्यति। (ईर्ष्यते)
ईह् (चाहना १ आ०) ईहते, ईहताम्, ऐहत, ईहेत, ईहिष्यते। (ईह्यते)
कथ् (कहना १० उ) प०—कथयति, कथयतु, अकथयत्, कथयेत्, कथयिष्यति। आ०—कथयते, कथयताम्, अकथयत, कथयेत, कथयिष्यते। (कथ्यते)
कम्प् (कांपना १आ०) कम्पते, कम्पताम्, अकम्पत, कम्पेत, कम्पिष्यते। (कम्प्यते)
क्लृप् (समर्थहोना १ आ०) कल्पते, कल्पताम्, अकल्पत, कल्पेत, कल्पिष्यते। (कल्प्यते)

कुप् (क्रोधकरना४प०) कुप्यति, कुप्यतु, अकुप्यत्, कुप्येत्, कोपिष्यति। (कुप्यते)
कूर्द् (कूदना १ आ०) कूर्दते, कूर्दताम्, अकूर्दत, कूर्देत, कूर्दिष्यते। (कूर्द्यते)
कृ (करना ८ उ०) प०—करोति, करोतु, अकरोत्, कुर्यात्, करिष्यति।
आ०—कुरुते, कुरुताम्, अकुरुत, कुर्वीत, करिष्यते। (क्रियते)
कृष् (खींचना १ प०) कर्षति, कर्षतु, अकर्षत्, कर्षेत्, कर्क्ष्यति। (कृष्यते)
कॄ (बिखेरना ६ प०) किरति, किरतु, अकिरत्, किरेत्, किरिष्यति। (कीर्यते)
कृत् (नाम लेना १० उ०) कीर्तयति, कीर्तयतु, अकीर्तयत्, कीर्तयेत्, कीर्तयिष्यति। (कीर्त्यते)
क्रन्द् (रोना १ प०) क्रन्दति, क्रन्दतु, अक्रन्दत्, क्रन्देत्, क्रन्दिष्यति। (क्रन्द्यते)

क्रम(चलना १ प०) क्रामति, क्रामतु, अक्रामत्, क्रामेत्, क्रमिष्यति। (क्रम्यते)
क्री (खरीदना ६ उ०) प०—क्रीणाति, क्रीणातु, अक्रीणात्, क्रीणीयात् क्रेष्यति।
आ०—क्रीणीते, क्रीणीताम्, अक्रीणीत, क्रीणीत, क्रेष्यते। (क्रीयते)
क्रीड(खेलना१प०)क्रीडति, क्रीडतु, अक्रीडत्, क्रीडेत्, क्रीडिष्यति। (क्रीड्यते)
क्लम् (थकना ४ प०) क्लाम्यति, क्लाम्यतु, अक्लाम्यत्, क्लाम्येत्, क्लमिष्यति। (क्लाम्यते)
क्लिश् (खिन्न होना ४ आ०) क्लिश्यते, क्लिश्यताम्, अक्लिश्यत, क्लिश्येत, क्लेशिष्यते। (क्लिश्यते)
क्लिश् (दुःख देना ६ प०) क्लिश्नाति, क्लिश्नातु, अक्लिश्नात्, क्लिश्नीयात्, क्लेशिष्यति। (क्लिश्यते)
क्षम् (क्षमा करना १आ०) क्षमते, क्षमताम्, अक्षमत, क्षमेत, क्षमिष्यते। ( क्षम्यते )
क्षल्(धोना१० उ०)प०क्षालयति,क्षालयतु,अक्षालयत्, क्षालयेत्,क्षालयिष्यति।
आ०—क्षालयते,क्षालयताम्,अक्षालयत, क्षालयेत, क्षालयिष्यते। (क्षाल्यते)
क्षिप्(फेंकना, ६ उ०) क्षिपति, क्षिपतु, अक्षिपत्, क्षिपेत्, क्षेप्स्यति। (क्षिप्यते)
क्षुभ् (क्षुब्ध होना १ आ०) क्षोभते, क्षोभताम्, अक्षोभत, क्षोभेत, क्षोभिष्यते। (क्षुभ्यते)
खण्ड् (खंडन करना १० उ०) खण्डयति, खण्डयतु, अखण्डयत्, खण्डयेत्, खण्डयिष्यति। (खण्ड्यते)
खन्(खोदना १ उ०) खनति, खनतु, अखनत्, खनेत्, खनिष्यति। (खन्यते)
खाद्(खाना१प०) खादति, खादतु, अखादत्, खादेत्, खादिष्यति। (खाद्यते)
गण् (गिनना १० उ०) गणयति, गणयतु, अगणयत्, गणयेत्, गणयिष्यति। ( गण्यते )
गम्(जाना १ प०)गच्छति, गच्छतु, अगच्छत्, गच्छेत्, गमिष्यति। (गम्यते)
गर्ज् (गरजना १ प०) गर्जति, गर्जतु, अगर्जत्, गर्जेत्, गर्जिष्यति। (गर्ज्यते)
गर्ह् (निन्दाकरना १०उ०) गर्हयति, गर्हयतु, अगर्हयत्, गर्हयेत्, गर्हयिष्यति। (गर्ह्यते)
गवेष् (खोजना१०उ०)गवेषयति,गवेषयतु,अगवेषयत्, गवेषयेत्, गवेषयिष्यति। (गवेष्यते)

गाह् (घुसना १ आ०) गाहते, गाहताम्, अगाहत, गाहेत, गाहिष्यते। (गाह्यते)
गुप् (निन्दा करना १ आ० ) जुगुप्सते, जुगुप्सताम्, अजुगुप्सत, जुगुप्सेत, जुगुप्सिष्यते। ( जुगुप्स्यते )
गॄ (निगलना ६ प०) गिरति, गिरतु, अगिरत्, गिरेत्, गिरिष्यति। (गीर्यते)
गै (गाना १ प०) गायति, गायतु, अगायत्, गायेत्, गास्यति। ( गीयते )
ग्रस् (खाना १ आ०) ग्रसते, ग्रसताम्, अग्रसत, ग्रसेत, ग्रसिष्यते। (ग्रस्यते)
ग्रह् (पकड़ना ६ उ०) प०—गृह्णाति, गृह्णातु, अगृह्णात्, गृह्णीयात्, ग्रहीष्यति।
आ०—गृह्णीते, गृह्णीताम्, अगृह्णीत, गृह्णीत, ग्रहीष्यते। (गृह्यते)
घट् (लगना १ आ०) घटते, घटताम्, अघटत, घटेत, घटिष्यते। ( घट्यते )
घुष् (घोषित करना १० उ०) घोषयति, घोषयतु, अघोषयत्, घोषयेत्, घोषयिष्यति। ( घोष्यते )

घ्रा (सूँघना १ प०) जिघ्रति, जिघ्रतु, अजिघ्रत्, जिघ्रेत्, घ्रास्यति। (घ्रायते)
चर् (चलना १ प०) चरति, चरतु, अचरत्, चरेत्, चरिष्यति। (चर्यते)
चल् (चलना १ प०)चलति, चलतु, अचलत्, चलेत्, चलिष्यति। (चल्यते)
चि (चुनना ५ उ०) चिनोति, चिनोतु, अचिनोत्, चिनुयात्, चेष्यति। (चीयते)
चिन्त् (सोचना१०उ०) प०—चिन्तयति, चिन्तयतु, अचिन्तयत्, चिन्तयेत्, चिन्तयिष्यति। आ०—चिन्तयते, चिन्तयताम्, अचिन्तयत, चिन्तयेत, चिन्तयिष्यते। ( चिन्त्यते )

चुर् (चुराना१०उ०)प०-चोरयति, चोरयतु,अचोरयत्,चोरयेत्, चोरयिष्यति।
आ०-चोरयते, चोरयताम्, अचोरयत, चोरयेत, चोरयिष्यते। (चोर्यते)
चेष्ट् (चेष्टा करना१आ०) चेष्टते, चेष्टताम्, अचेष्टत, चेष्टेत, चेष्टिष्यते (चेष्ट्यते)
छिद् (काटना७उ०) छिनत्ति,छिनत्तु,अच्छिनत्, छिन्द्यात्, छेत्स्यति। (छिद्यते)
जन् (पैदा होना ४ आ०) जायते, जायताम्, अजायत, जायेत, जनिष्यते ( जायते )

जप् (जपना १ प०) जपति, जपतु, अजपत्, जपेत्, जपिष्यति। (जप्यते)
जि (जीतना १ प०) जयति, जयतु, अजयत्, जयेत्, जेष्यति। (जीयते)
जीव् (जीना १ प०) जीवति, जीवतु,अजीवत्,जीवेत्, जीविष्यति। (जीव्यते)
जॄ (वृद्ध होना ४ प०)जीर्यति, जीर्यतु, अजीर्यत्, जीर्येत्,जरिष्यति। (जीर्यते)
ज्ञा (जानना ९ उ०) प०-जानाति,जानातु,अजानात्, जानीयात्, ज्ञास्यति।
आ०-जानीते, जानीताम्, अजानीत, जानीत, ज्ञास्यते। (ज्ञायते)

ज्वल् (जलना १ प०) ज्वलति, ज्वलतु, अज्वलत्, ज्वलेत्, ज्वलिष्यति। (ज्वल्यते)
डी (उड़ना ४ आ०) डीयते, डीयताम्, अडीयत, डीयेत, डयिष्यते। (डीयते)
तड् (पीटना १० उ०) ताडयति, ताडयतु, अताडयत्, ताडयेत्, ताडयिष्यति। (ताड्यते)
तन् (फैलाना ८ उ०) प०—तनोति, तनोतु, अतनोत्, तनुयात्, तनिष्यति। आ०–तनुते, तनुताम्, अतनुत, तन्वीत, तनिष्यते (तायते, तन्यते)
तप् (तपना १ प०) तपति, तपतु, अतपत्, तपेत्, तपस्यति। (तप्यते)
तर्क (सोचना १० उ०) तर्कयति, तर्कयतु, अतर्कयत्, तर्कयेत्, तर्कयिष्यति। (तर्क्यते)
तर्ज् (डाटना १० उ०) तर्जयति-ते, तर्जयतु, अतर्जयत्, तर्जयेत्, तर्जयिष्यति। (तर्ज्यते)
तुद् (दुःख देना ६ उ०) तुदति-ते, तुदतु, अतुदत्, तुदेत्, तोत्स्यति। (तुद्यते)
तुल् (तोलना १० उ०) तोलयति, तोलयतु, अतोलयत्, तोलयेत्, तोलयिष्यति। (तोल्यते)
तुष् (तुष्ट होना ४ प०) तुष्यति, तुष्यतु, अतुष्यत्, तुष्येत्, तोद्यति। (तुष्यते)
तृप् (तृप्त होना ४ प०) तृप्यति, तृप्यतु, अतृप्यत्, तृप्येत्, तर्पिष्यति। (तृप्यते)
तृप् (तृप्त करना १० उ०) तर्पयति, तर्पयतु, अतर्पयत्, तर्पयेत्, तर्पयिष्यति। (तर्प्यते)
तॄ (तैरना १ प०) तरति, तरतु, अतरत्, तरेत्, तरिष्यति। (तीर्यते)
त्यज् (छोड़ना २ प०) त्यजति, त्यजतु, अत्यजत्, त्यजेत्, त्यक्ष्यति। (त्यज्यते)
त्रप् (लजाना १ आ०) त्रपते, त्रपताम्, अत्रपत, त्रपेत, त्रपिष्यते। (त्रप्यते)
त्रै (बचाना १ आ०) त्रायते, त्रायताम्, अत्रायत, त्रायेत, त्रास्यते। (त्रायते)
त्वर् (जल्दी करना १ आ०) त्वरते, त्वरताम्, अत्वरत, त्वरेत, त्वरिष्यते। (त्वर्यते)
दण्ड् (दंड देना १० उ०) दण्डयति-ते, दंडयतु, अदंडयत्, दंडयेत्, दंडयिष्यति। (दण्ड्यते)
दम् (दमनकरना ४ प०) दाम्यति, दाम्यतु, अदाम्यत्, दाम्येत्, दमिष्यति। (दम्यते)
दह् (जलाना १ प०) दहति, दहतु, अदहत्, दहेत्, धक्ष्यति। (दह्यते)
दा (देना ३ उ०) प०—ददाति, ददातु, अददात्, दद्यात्, दास्यति। आ०—दत्ते, दत्ताम्, अदत्त, ददीत, दास्यते। (दीयते)

दिव् (जुआ खेलना ४ प०) दीव्यति, दीव्यतु, अदीव्यत्, दीव्येत्, देविष्यति। (दीव्यते)
दिश् (देना, कहना ६ उ०) दिशति-ते, दिशतु, अदिशत्, दिशेत्, देक्ष्यति (दिश्यते)
दीक्ष् (दीक्षा देना १ आ०) दीक्षते, दीक्षताम्, अदीक्षत, दीक्षेत, दीक्षिष्यते (दीक्ष्यते)
दीप् (चमकना ४ आ०) दीप्यते, दीप्यताम्, अदीप्यत, दीप्येत, दीपिष्यते। (दीप्यते)
दुह् (दुहना २ उ०) दोग्धि, दोग्धु, अधोक्, दुह्यात्, धोक्ष्यति। (दुह्यते)
दृ (आदर करना ६ आ०) आ + द्रियते, आद्रियताम्, आद्रियत, आद्रियेत, आदरिष्यते। (आद्रियते)
दृश् (देखना १ प०) पश्यति, पश्यतु, अपश्यत्, पश्येत्, द्रक्ष्यति। (दृश्यते)
द्युत् (चमकना १ आ०) द्योतते, द्योतताम्, अद्योतत, द्योतेत, द्योतिष्यते। (द्योत्यते)
द्रुह् (द्रोह करना ४ प०) द्रुह्यति, द्रुह्यतु, अद्रुह्यत्, द्रुह्येत्, द्रोहिष्यति। (द्रुह्यते)
धा (धारण करना ३ उ०) प०—दधाति, दधातु, अदधात्, दध्यात्, धास्यति।
आ०—धत्ते, धत्ताम्, अधत्त, दधीत, धास्यते (धीयते)
धाव् (दौड़ना १ उ०) धावति-ते, धावतु, अधावत्, धावेत्, धाविष्यति। (धाव्यते)
धृ (पहनना, रखना १० उ०) धारयति, धारयतु, अधारयत्, धारयेत्, धारयिष्यति। (धार्यते)
ध्यै (ध्यान करना १ प०) ध्यायति, ध्यायतु, अध्यायत्, ध्यायेत्, ध्यास्यति। (ध्यायते)
ध्वंस् (नष्ट होना १ आ०) ध्वंसते, ध्वंसताम्, अध्वंसत, ध्वंसेत, ध्वंसिष्यते। (ध्वंस्यते)
नम् (झुकना १ प०) नमति, नमतु, अनमत्, नमेत्, नंस्यति। (नम्यते)
नश् (नष्ट होना ४ प०) नश्यति, नश्यतु, अनश्यत्, नश्येत्, नशिष्यति (नश्यते)
निन्द् (निन्दा करना १ प०) निन्दति, निन्दतु, अनिन्दत्, निन्देत्, निन्दिष्यति। (निन्द्यते)
नी (लेजाना १ उ०) प०—नयति, नयतु, अनयत्, नयेत्, नेष्यति।
आ०—नयते, नयताम्, अनयत, नयेत, नेष्यते। (नीयते)
नुद् (प्रेरणा देना ६ उ०) नुदति-ते, नुदतु, अनुदत्, नुदेत्, नोत्स्यति। (नुद्यते)
नृत् (नाचना ४ प०), नृत्यति, नृत्यतु, अनृत्यत्, नृत्येत्, नर्तिष्यति। (नृत्यते)
पच् (पकाना १ उ०) पचति-ते, पचतु, अपचत्, पचेत्, पक्ष्यति। (पच्यते)
पठ् (पढ़ना १ प०) पठति, पठतु, अपठत्, पठेत्, पठिष्यति। (पठ्यते)
पत् (गिरना १ प०) पतति, पततु, अपतत्, पतेत् पतिष्यति। (पत्यते)
पद् (जाना ४ आ०) पद्यते, पद्यताम्, अपद्यत, पद्येत, पत्स्यते। (पद्यते)

पा (पीना १ प०) पिबति, पिबतु, अपिबत्, पिबेत्, पास्यति। (पीयते)
पा (रक्षा करना २ प०) पाति, पातु, अपात्, पायात्, पास्यति। (पायते)
पाल् (रक्षा करना १० उ०) पालयति-ते, पालयतु, अपालयत्, पालयेत्, पालयिष्यति। (पाल्यते)
पीड् (दुःख देना १० उ०) पीडयति, पीडयतु, अपीडयत्, पीडयेत्, पीडयिष्यति। (पीड्यते)
पुष् (पुष्ट करना ४प०) पुष्यति, पुष्यतु, अपुष्यत्, पुष्येत्, पोक्ष्यति। (पुष्यते)
पृ (पालना १० उ०) पारयति–ते, पारयतु, अपारयत्, पारयेत्, पारयिष्यति। (पूर्यते)
प्रच्छ् (पूछना ६ प०) पृच्छति, पृच्छतु, अपृच्छत्, पृच्छेत्, प्रक्ष्यति। (पृच्छ्यते)
प्रथ् (फैलना १ आ०) प्रथते, प्रथताम्, अप्रथत, प्रथेत, प्रथिष्यते। (प्रथ्यते)
प्र+ईर् (प्रेरणा देना १० उ०) प्रेरयति, प्रेरयतु, प्रैरयत्, प्रेरयेत्, प्रेरयिष्यति (प्रेर्यते)
बन्ध् (बाँधना९प०)बध्नाति, बध्नातु, अबध्नात्, बध्नीयात्, भन्त्स्यति(बध्यते)
बाध् (पीड़ा देना १ आ०) बाधते, बाधताम्, अबाधत, बाधेत, बाधिष्यते (बाध्यते)
बुध् (जानना ४आ०)बुध्यते, बुध्यताम्, अबुध्यत, बुध्येत, भोत्स्यते। (बुध्यते)
ब्रू (बोलना २ उ०) ब्रवीति, ब्रवीतु, अब्रवीत्, ब्रूयात्, वक्ष्यति। (ऊच्यते)
भक्ष्(खाना१०उ०)प०–भक्षयति, भक्षयतु, अभक्षयत्, भक्षयेत्, भक्षयिष्यति। आ०–भक्षयते, भक्षयताम्, अभक्षयत, भक्षयेत, भक्षयिष्यते। (भक्ष्यते)
भज् (सेवा करना १ उ०) भजति-ते, भजतु, अभजत्, भजेत्, भक्ष्यति। ( भज्यते )
भा (चमकना २ प०) भाति, भातु, अभात्, भायात्, भास्यति। (भायते)
भाष्, (बोलना१आ०) भाषते, भाषताम्, अभाषत, भाषेत, भाषिष्यते। (भाष्यते)
भास् (चमकना१आ०)भासते, भासताम्, अभासत, भासेत, भासिष्यते। (भास्यते)
भिक्ष् (माँगना १ आ०) भिक्षते, भिक्षताम्, अभिक्षत, भिक्षेत, भिक्षिष्यते। (भिक्ष्यते)
भिद् (तोड़ना७उ०) भिनत्ति, भिनत्तु, अभिनत्, भिन्द्यात्, भेत्स्यति। (भिद्यते)
भी (डरना ३ प०) बिभेति, बिभेतु, अबिभेत्, बिभीयात्, भेष्यति। (भीयते)

भुज् (पालना ७उ०) प०—भुनक्ति, भुनक्तु, अभुनक्, भुज्यात्, भोक्ष्यति। (भुज्यते)

भुज् (खाना७आ०) आ०—भुङ्क्ते, भुङ्क्ताम्, अभुङ्क्त, भुंजीत, भोक्ष्यते। (भुज्यते)

भू (होना १ प०) भवति, भवतु, अभवत्, भवेत्, भविष्यति। (भूयते)

भृ (पालन करना १ उ०) भरति-ते, भरतु, अभरत्, भरेत्, भरिष्यति। (भ्रियते)

भृ (धारण पोषण क० ३ उ०) बिभर्ति, बिभर्तु, अबिभः, बिभृयात्, भरिष्यति। (भ्रियते)

भ्रम् (घूमना १ प०) भ्रमति, भ्रमतु, अभ्रमत्, भ्रमेत्, भ्रमिष्यति। (भ्रम्यते)

भ्रम् (घूमना ४ प०) भ्राम्यति, भ्राम्यतु, अभ्राम्यत्, भ्राम्येत्, भ्रमिष्यति (भ्रम्यते)

भ्रंश् (गिरना १आ०) भ्रंशते, भ्रंशताम्, अभ्रंशत, भ्रंशेत, भ्रंशिष्यते। (भ्रश्यते)

भ्राज् (चमकना १ आ०) भ्राजते, भ्राजताम्, अभ्राजत, भ्राजेत, भ्राजिष्यते। (भ्राज्यते)

मण्ड् (मंडन करना १० उ०) मण्डयति, मण्डयतु, अमण्डयत्, मण्डयेत्, मण्डयिष्यति। (मण्ड्यते)

मथ् (मथना १ प०) मथति, मथतु, अमथत्, मथेत्, मथिष्यति। (मथ्यते)

मद् (खुश होना ४प०) माद्यति, माद्यतु, अमाद्यत्, माद्येत्, मदिष्यति। (मद्यते)

मन् (मानना ४ आ०) मन्यते, मन्यताम्, अमन्यत, मन्येत, मंस्यते। (मन्यते)

मन्त्र् (मंत्रणा करना १० उ०) आ०—मन्त्रयते, मन्त्रयताम्, अमन्त्रयत, मन्त्रयेत, मन्त्रयिष्यते।

(परस्मै०) मन्त्रयति, मन्त्रयतु, अमन्त्रयत्, मन्त्रयेत्, मन्त्रयिष्यति। (मंत्र्यते)

मन्थ् (मथना ६ प०) मथ्नाति, मथ्नातु, अमथ्नात्, मथ्नीयात्, मन्थिष्यति। (मथ्यते)

मा (नापना २ प०) माति, मातु, अमात्, मायात्, मास्यति। (मीयते)

मुच् (छोड़ना ६ उ०) प०—मुञ्चति, मुञ्चतु, अमुञ्चत्, मुञ्चेत्, मोक्ष्यति।

आ०—मुञ्चते, मुञ्चताम्, अमुञ्चत, मुञ्चेत, मोक्ष्यते। (मुच्यते)

मुद् (खुश होना१आ०) मोदते, मोदताम्, अमोदत, मोदेत, मोदिष्यते। (मुद्यते)

मुष् (चुराना ६ प०) मुष्णाति, मुष्णातु, अमुष्णात्, मुष्णीयात्, मोषिष्यति। (मुष्यते)

मूर्च्छ् (मूर्च्छित होना १ प०) मूर्च्छति, [मू]र्च्छतु, अमूर्च्छत्, मूर्च्छेत्, मूर्च्छिष्यति। (मूर्च्छ्यते)
मृ (मरना ६ आ०) म्रियते, म्रियताम्, अम्रियत, म्रियेत, मरिष्यते। (म्रियते)
म्लै (मुरझाना १ प०) म्लायति, म्लायतु, अम्लायत्, म्लायेत्, म्लास्यति। (म्लायते)
यज् (यज्ञ करना १ उ०) यजति-ते, यजतु, अयजत्, यजेत्, यक्ष्यति। (इज्यते)
यत् (यत्न करना १ आ०) यतते, यतताम्, अयतत, यतेत, यतिष्यते। (यत्यते)
या (जाना २ प०) याति, यातु, अयात्, यायात्, यास्यति। (यायते)
याच् (मांगना १ उ०) प०—याचति, याचतु, अयाचत्, याचेत्, याचिष्यति। आ०—याचते, याचताम्, अयाचत, याचेत, याचिष्यते। (याच्यते)
याप् (बिताना णिच्, प०) यापयति, यापयतु, अयापयत्, यापयेत्, यापयिष्यति। (याप्यते)
युज् (लगाना १० उ०) योजयति, योजयतु, अयोजयत्, योजयेत्, योजयिष्यति। (योज्यते)
युध् (लड़ना ४ आ०) युध्यते, युध्यताम्, अयुध्यत, युध्येत, योत्स्यते। (युध्यते)
रक्ष् (रक्षा करना १ प०) रक्षति, रक्षतु, अरक्षत्, रक्षेत्, रक्षिष्यति। (रक्ष्यते)
रच् बनाना १० उ०) रचयति-ते, रचयतु, अरचयत्, रचयेत्, रचयिष्यति। (रच्यते)
रञ्ज् (खुशहोना ४ उ०) रज्यति-ते, रज्यतु, अरज्यत्, रज्येत्, रंक्ष्यति। (रज्यते)
रम् (रमना १ आ०) रमते, रमताम्, अरमत, रमेत, रंस्यते। (रम्यते)
(वि+रम्, प०) विरमति, विरमतु, व्यरमत्, विरमेत्, विरंस्यति (विरम्यते)
राज् (चमकना १ उ०) प०—राजति, राजतु, अराजत्, राजेत्, राजिष्यति। आ०—राजते, राजताम्, अराजत, राजेत, राजिष्यते। (राज्यते)
रुच् (अच्छा लगना, १ आ०) रोचते, रोचताम्, अरोचत, रोचेत, रोचिष्यते। (रुच्यते)
रुद् (रोना २ प०) रोदिति, रोदितु, अरोदीत्, रुद्यात्, रोदिष्यति। (रुद्यते)
रुध् (रोकना, ७ उ०) प०—रुणद्धि, रुणद्धु, अरुणत्, रुन्ध्यात्, रोत्स्यति। आ०—रुन्धे, रुन्धाम्, अरुन्ध, रुन्धीत, रोत्स्यते। (रुध्यते)
रुह् (उगना १ प०) रोहति, रोहतु, अरोहत्, रोहेत्, रोक्ष्यति। (रुह्यते)
लङ्घ् (लांघना १ आ०) लङ्घते, लङ्घताम्, अलङ्घत, लङ्घेत, लङ्घिष्यते। (लङ्घ्यते)

लप् (बोलना १ प०) लपति, लपतु, अलपत्, लपेत्, लपिष्यति। (लप्यते)
लभ (पाना १ आ०) लभते, लभताम्, अलभत, लभेत, लप्स्यते। (लभ्यते)
लम्ब् (लटकना १ आ०) लम्बते, लम्बताम्, अलम्बत, लम्बेत, लम्बिष्यते। (लम्ब्यते)

लष् (चाहना १ उ०) लषति-ते, लषतु, अलषत्, लषेत्, लषिष्यति। (लष्यते)
लिख् (लिखना ६प०) लिखति, लिखतु, अलिखत्, लिखेत्, लेखिष्यति। (लिख्यते)
लिप् (लीपना ६उ०) लिम्पति-ते, लिम्पतु, अलिम्पत्, लिम्पेत्, लेप्स्यति। (लिप्यते)

ली (लीन होना ४आ०) लीयते, लीयताम्, अलीयत, लीयेत, लेष्यते। (लीयते)
लुप् (नष्टकरना६उ०) लुम्पति-ते, लुम्पतु, अलुम्पत्, लुम्पेत्, लोपिष्यति। (लुप्यते)
लुभ् (लोभकरना४प०) लुभ्यति, लुभ्यतु, अलुभ्यत्, लुभ्येत्, लोभिष्यति। (लुभ्यते)
लोक् (देखना१आ०) लोकते, लोकताम्, अलोकत, लोकेत, लोकिष्यते। (लोक्यते)
लोच् (देखना१०उ०) लोचयति-ते, लोचयतु, अलोचयत्, लोचयेत्, लोचयिष्यति। (लोच्यते)

वद् (बोलना १ प०) वदति, वदतु, अवदत्, वदेत्, वदिष्यति। (उद्यते)
वन्द् (प्रणाम करना १ आ०) वन्दते, वन्दताम्, अवन्दत, वन्देत, वन्दिष्यते। (वन्द्यते)

वप् (बोना १ उ०) वपति-ते, वपतु, अवपत्, वपेत्, वप्स्यति। (उप्यते)
वस् (रहना १ प०) वसति, वसतु, अवसत्, वसेत्, वत्स्यति। (उष्यते)
वह् (ढोना १ उ०) वहति-ते, वहतु, अवहत्, वहेत्, वक्ष्यति। (उह्यते)
वा (हवा चलना २ प०) वाति, वातु, अवात्, वायात्, वास्यति। (वायते)
विद् (जानना २प०) वेत्ति, वेत्तु, अवेत्, विद्यात्, वेदिष्यति। (विद्यते)
विद् (होना ४ आ०) विद्यते, विद्यताम्, अविद्यत, विद्येत, वेत्स्यते। (विद्यते)
विद् (पाना६उ०) विन्दति-ते, विन्दतु, अविन्दत्, विन्देत्, वेदिष्यति। (विद्यते)
विद् (कहना १०आ०) वेदयते, वेदयताम्, अवेदयत, वेदयेत, वेदयिष्यते। (वेद्यते)
विश् (घुसना६प०) विशति, विशतु, अविशत्, विशेत्, वेक्ष्यति। (विश्यते)
वृ (चुनना ५ उ०) वृणोति, वृणोतु, अवृणोत्, वृणुयात्, वरिष्यति। (व्रियते)
वृत् (होना १ आ०) वर्तते, वर्तताम्, अवर्तत, वर्तेत, वर्तिष्यते। (वृत्यते)
वृध् (बढ़ना १ आ०) वर्धते, वर्धताम्, अवर्धत, वर्धेत, वर्धिष्यते। (वृध्यते)

वृष् (बरसना १ प०) वर्षति, वर्षतु, अवर्षत्, वर्षेत्, वर्षिष्यति। (वृष्यते)

वे (बुनना १ उ०) वयति-ते, वयतु, अवयत्, वयेत् वास्यति। (ऊयते)

वेप् (कांपना, १ आ०) वेपते, वेपताम्, अवेपत, वेपेत, वेपिष्यते। (वेप्यते)

व्यथ् (दुःखित होना १ आ०) व्यथते, व्यथताम्, अव्यथत, व्यथेत, व्यथिष्यते। (व्यथ्यते)

व्यध् (वेधना ४ प०) विध्यति, विध्यतु, अविध्यत्, विध्येत्, वेत्स्यति। (विध्यते)

शक् (सकना ५ प०) शक्नोति, शक्नोतु, अशक्नोत्, शक्नुयात्, शक्ष्यति। (शक्यते)

शङ्क् (शङ्का करना १ आ०) शङ्कते, शङ्कताम्, अशङ्कत, शङ्केत, शङ्किष्यते। (शंक्यते)

शप् (शाप देना १ उ०) शपति-ते, शपतु, अशपत्, शपेत्, शप्स्यति। (शप्यते)

शम् (शान्त होना ४ प०) शाम्यति, शाम्यतु, अशाम्यत्, शाम्येत्, शमिष्यति। (शम्यते)

शास् (शिक्षा देना २ प०) शास्ति, शास्तु, अशात्, शिष्यात्, शासिष्यति (शिष्यते)

शिक्ष् (सीखना १ आ०) शिक्षते, शिक्षताम्, अशिक्षत, शिक्षेत, शिक्षिष्यते। (शिक्ष्यते)

शी (सोना २ आ०) शेते, शेताम्, अशेत, शयीत, शयिष्यते। (शय्यते)

शुच् (शोक करना १ प०) शोचति, शोचतु, अशोचत्, शोचेत्, शोचिष्यति। (शुच्यते)

शुध् (शुद्ध होना ४ प०) शुध्यति, शुध्यतु, अशुध्यत्, शुध्येत्, शोत्स्यति। (शुध्यते)

शुभ् (अच्छा लगना १ आ०) शोभते, शोभताम्, अशोभत, शोभेत, शोभिष्यते। (शुभ्यते)

शुष् (सूखना ४ प०) शुष्यति, शुष्यतु, अशुष्यत्, शुष्येत्, शोक्ष्यति। (शुष्यते)

शॄ (नष्ट होना ९ प०) शृणाति, शृणातु, अशृणात्, शृणीयात्, शरिष्यति। ( शीर्यते )

श्रि (आश्रय लेना १ उ०) श्रयति-ते, श्रयतु, अश्रयत्, श्रयेत्, श्रयिष्यति। (श्रीयते)

श्रु (सुनना १ प०) शृणोति, शृणोतु, अशृणोत्, शृणुयात्, श्रोष्यति (श्रूयते)

श्लिष् (आलिंगन करना ४ प०) श्लिष्यति, श्लिष्यतु, अश्लिष्यत्, श्लिष्येत्, श्लेषिष्यति। (श्लिष्यते)

श्वस् (साँस लेना २ प०) श्वसिति, श्वसितु, अश्वसीत्, श्वस्यात्, श्वसिष्यति। (श्वस्यते)

सद् ( बैठना १ प० ) सीदति, सीदतु, असीदत्, सीदेत्, सत्स्यति। (सद्यते)

सह् (सहना १ आ०) सहते, सहताम्, असहत, सहेत, सहिष्यते। (सह्यते)
सान्त्व् (धैर्य बँधाना १० उ०) सान्त्वयति, सान्त्वयतु, असान्त्वयत्, सान्त्वयेत्, सान्त्वयिष्यति। (सान्त्व्यते)
सिञ्च् (सींचना ६ उ०) सिञ्चति-ते, सिञ्चतु, असिञ्चत्, सिञ्चेत्, सेक्ष्यति। (सिच्यते)
सिव् (सीना ४ प०) सीव्यति, सीव्यतु, असीव्यत्, सीव्येत्, सेविष्यति। (सीव्यते)
सु (निचोड़ना ५ उ०) प०—सुनोति, सुनोतु, असुनोत्, सुनुयात्, सोष्यति। आ०—सुनुते, सुनुताम्, असुनुत, सुन्वीत, सोष्यते। (सूयते)
सृ (चलना १ प०) सरति, सरतु, असरत्, सरेत्, सरिष्यति। (स्रियते)
सृज् (बनाना ६ प०) सृजति, सृजतु, असृजत्, सृजेत्, स्रक्ष्यति। (सृज्यते)
सेव् (सेवा करना १ आ०) सेवते, सेवताम्, असेवत, सेवेत, सेविष्यते। (सेव्यते)
सो (नष्ट होना ४ प०) स्यति, स्यतु, अस्यत्, स्येत्, सास्यति। (सीयते)
स्तु (स्तुति करना २ उ०) स्तौति, स्तौतु, अस्तौत्, स्तूयात्, स्तोष्यति (स्तूयते)
स्था (रुकना १ प०) तिष्ठति, तिष्ठतु, अतिष्ठत्, तिष्ठेत्, स्थास्यति। (स्थीयते)
स्ना (नहाना २ प०) स्नाति, स्नातु, अस्नात्, स्नायात्, स्नास्यति। (स्नायते)
स्निह् (स्नेह करना ४ प०) स्निह्यति, स्निह्यतु, अस्निह्यत्, स्निह्येत्, स्नेहिष्यति। (स्निह्यते)
स्पन्द् (हिलना १ आ०) स्पन्दते, स्पन्दताम्, अस्पन्दत, स्पन्देत, स्पन्दिष्यते। (स्पन्द्यते)
स्पर्ध् (स्पर्धा करना १ आ०) स्पर्धते, स्पर्धताम्, अस्पर्धत, स्पर्धेत, स्पर्धिष्यते। (स्पर्ध्यते)
स्पृश् (छूना ६ प०) स्पृशति, स्पृशतु, अस्पृशत्, स्पृशेत्, स्पर्क्ष्यति। (स्पृश्यते)
स्पृह् (चाहना १० उ०) स्पृहयति, स्पृहयतु, अस्पृहयत्, स्पृहयेत्, स्पृहयिष्यति। (स्पृह्यते)
स्मृ (याद करना १ प०) स्मरति, स्मरतु, अस्मरत्, स्मरेत्, स्मरिष्यति। (स्मर्यते)
स्रंस् (गिरना १ आ०) स्रंसते, स्रंसताम्, अस्रंसत, स्रंसेत, स्रंसिष्यते। (स्रस्यते)
स्वद् (स्वाद लेना १० उ०) आ+स्वादयति, आस्वादयतु, आस्वादयत्, आस्वादयेत्, आस्वादयिष्यति। (आस्वाद्यते)
स्वप् (सोना २ प०) स्वपिति, स्वपितु, अस्वपत्, स्वप्यात्, स्वप्स्यति। (सुप्यते)
हन् (मारना २ प०) हन्ति, हन्तु, अहन्, हन्यात्, हनिष्यति। (हन्यते)
हस् (हँसना १ प०) हसति, हसतु, अहसत्, हसेत्, हसिष्यति। (हस्यते)

हा (छोड़ना ३ प०) जहाति, जहातु, अजहात्, जह्यात्, हास्यति। (हीयते)
हु (यज्ञ करना ३ प०) जुहोति, जुहोतु, अजुहोत्, जुहुयात्, होष्यति। (हूयते)
हृ (ले जाना, चुराना १ उ०) प०—हरति, हरतु, अहरत्, हरेत्, हरिष्यति।
आ०—हरते, हरताम्, अहरत, हरेत, हरिष्यते। (ह्रियते)
हृष् (प्रसन्नहोना४प०) हृष्यति, हृष्यतु, अहृष्यत्, हृष्येत्, हर्षिष्यति। (हृष्यते)
हेष् (हिनहिनाना१आ०) हेषते, हेषताम्, अहेषत, हेषेत, हेषिष्यते। (हेष्यते)
ह्लाद् (आनन्दित होना १ आ०) ह्लादते, ह्लादताम्, अह्लादत, ह्लादेत, ह्लादिष्यते। (ह्लाद्यते)
ह्वे (पुकारना१उ०) आह्वयति-ते, आह्वयतु, आह्वयत्, आह्वयेत्, आह्वयिष्यति। (आहूयते)

---

विशेष—धातुओं के अधिक ज्ञान के लिए देखिए—
"बृहद् अनुवादचन्द्रिका"।

# शुद्धि-पत्र

| पृष्ठ | पँक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| १०६ | २४ | वद्धाः | वद्धा |
| १५० | २७ | काव्य | काव्यं |
| १५४ | १६ | सदधाति | संदधाति |
| १६१ | २७ | भगवती | भगवति |
| १६३ | १४ | कण्ठकाः | कण्ठकालः |
| २३० | २ | वतमानस्य | वर्तमानस्य |



# बृहद्-अनुवाद-चन्द्रिका

लेखक

**श्री चक्रधर नौटियाल 'हंस' शास्त्री**

एम. ए., एल. टी.

बृहद् अनुवाद चन्द्रिका में व्याकरण के नियमों का आधार पाणिनीय सूत्रों को रखा गया है और उपयुक्त व्याकरण, जैसे—सन्धि-कारक-समास-क्रिया-कृदन्त-तद्धित-स्त्रीप्रत्यय प्रकरणों के अतिरिक्त उसमें संस्कृत के मुहावरे, लोकोक्तियां, पत्र-लेखन प्रकार, संस्कृत व्यावहारिक शब्द-संग्रह, वृत-परिचय, अशुद्धि-प्रदर्शन, संस्कृत परीक्षाओं के अनुवाद सम्बन्धी प्रश्न-पत्र और निवन्ध रत्नमाला का समावेश किया गया है। इन विषयों के अतिरिक्त उसमें लगभग १२५ शब्दों के सातों विभक्तियों के रूप, २०० धातुओं के दसों लकारों के समस्त रूप तथा ५०० धातुओं के संक्षिप्त रूप दिये गये हैं। साथ ही साथ सोपसर्ग धातुओं के उदाहरण महा-कवियों की सुप्रसिद्ध रचनाओं से उद्‌धृत किये गये हैं। अनुवादार्थ गद्य-पद्य-संग्रह में महाकवियों की अमर रचनाओं से उद्धरण दिये गये हैं, जिनके पारायण से सहृदय उन कवियों की कविताओं के रसास्वादन का आनन्द भी ले सकते हैं। इस प्रकार पुस्तक को परमोपयोगी वनाने का भरसक प्रयत्न किया गया हैं।

पुस्तक की एक और विशेषता यह है कि इसमें व्याकरण तथा अनुवाद की प्रारम्भिक शृंखला टूटने नहीं पायी है जिससे अल्पज्ञान वाले छात्र तथा प्रौढ़ ज्ञान वाले दोनों ही प्रकार के छात्र लाभान्वित हो सकते हैं। एक ओर इससे मैट्रिकुलेशन, इंटरमीडियट, प्राज्ञ, प्रथमा आदि निम्न कक्षाओं के छात्र लाभ उठा सकते हैं तो दूसरी ओर बी. ए., एम. ए., शास्त्री तथा आचार्य आदि उच्च कक्षाओं के छात्र लाभान्वित हो सकते हैं। अनुवाद के अभ्यासार्थ प्रदेश के विभिन्न शिक्षा-संस्थानों—हाई स्कूल बोर्ड, महाविद्यालयों एवं विश्वविद्यालयों की परीक्षाओं—के प्रश्न-पत्र भी सहायक टिप्पणियों के साथ दिये गये हैं और पुस्तक के अन्त में निबन्धरत्नमाला में उच्च कक्षाओं के लिये परमोपयोगी विषयों पर १६ निवन्ध दिये गये हैं। अतः इसमें सन्देह नहीं कि यह पुस्तक अपनी शैली की अनूठी पुस्तक है और संस्कृत अध्ययन एवं अनुशीलन करने वालों के लिये कामधेनु की तरह हितकारी है। ऐसी दिव्य, भव्य और हृद्य पुस्तक आज तक नहीं लिखी गयी। इससे प्रत्येक संस्कृत प्रेमी को लाभ उठाना चाहिए। पुस्तक बृहद् आकार में छपी है और इसमें लगभग ७५० पृष्ठ हैं।

मूल्य केवल १०)

प्रकाशक—

**मोतीलाल बनारसीदास**



दिल्ली : वाराणसी : पटना